॥ अथ षोडशी ॥

कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुः ।

इंद्रं स्तोमेभिर्महयंत आयवः प्रियमेधासो अस्वरन् ॥ १६

कण्वाःऽइव । भृगवः । सूर्याःऽइव । विश्वं । इत् । धीतं ।

आनशुः ।

इंद्रं । स्तोमेभिः । महयंतः । आयवः । प्रियऽमेधासः ।

अस्वरन् ॥ १६

कण्वा इव कण्वगोत्रोत्पन्ना ऋषय इव स्तुवंतो भृगवो भृगुगोत्रोत्पन्ना ऋषयो धीतमाध्यातं विश्वमित् व्याप्तं सर्वमैश्वर्यमानशुः । आपुः । सूर्या इव । यथा सूर्यरश्मयः सर्वं जगद्व्याप्नुवंति तद्वत् । अपि च प्रियमेधासः प्रियमेधा एतत्संज्ञा आयवो मनुष्यास्त्वदीयमिंद्रं महयंत पूजयंतः स्तोमेभिः स्तोत्रैरस्वरन् । अस्तुवन् ॥ स्वर शब्दोपतापयोः । भौवादिकः ॥

॥ अथ सप्तदशी ॥

युक्ष्वा हि वृत्रहंतम हरी इंद्र परावतः ।

अर्वाचीनो मघवन्सोमपीतय उग्र ऋष्वेभिरा गहि ॥ १७

युक्ष्व । हि । वृत्रहन्ऽतम । हरी इति । इंद्र । पराऽवतः ।

अर्वाचीनः । मघऽवन् । सोमऽपीतये । उग्रः । ऋष्वेभिः ।

आ । गहि ॥ १

हे वृत्रहंतम । वृत्रं हतवान् वृत्रहा अतिशयेन हतवान् वृत्रहंतमः । यथा पुनर्नोत्तिष्ठति तथा हतवानित्यर्थः ॥ अतो नुडिति तमपो नुट् ॥ हे तादृशेंद्र हरी त्वदीयावश्वौ युक्ष्व । हि रवधारणे । आत्मीये रथे योजयेत्यर्थः । हे मघवन् धनवन् उग्र उद्गूर्णबल सोमपीतये सोमपानाय ॥ दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं ॥ अर्वा-

वीनोऽस्मदभिमुखं मध्ये मिश्रं देवैर्यमो देवैर्वृद्धिः सार्धं परावतः । दूरनामैतत् । दूरे वर्तमानाद्युलोकादागच्छ । आगच्छ ॥ गमेर्लोटः सेर्हिः । छांदसः शपो लुक् । अनुदात्तोपदेशेत्यनुनासिकलोपः । तस्यासिद्धवदत्राभादित्यसिद्धत्वाद्धेर्लुगभावः ॥

अथाष्टादशी ।

इमे हि ते कारवो वावशुर्धिया विप्रासो मेधसातये ।

स त्वं नो मघवन्निंद्र गिर्वणो वेनो न शृणुधी हवं ॥ १८

इमे । हि । ते । कारवः । वावशुः । धिया । विप्रासः ।

मेधऽसातये ।

सः । त्वं । नः । मघऽवन् । इंद्र । गिर्वणः । वेनः । न ।

न । शृणुधि । हवं ॥ १८

कारवः कर्मणां कर्तारो विप्रासो मेधाविन इमे स्तोमे खलु यजमाना धिया स्तुत्या हे इंद्र ते त्वां वावशुः । पुनरस्तुवन् ॥ वाशृ शब्दे इत्यस्माच्छन्दसि लुङ्लङ्लिट इति लिडुक्तरूपमेतत् ॥ यद्वा वावशुः पुनः पुनरकामयंत ॥ वश कांतौ । अस्माच्छन्दसि लुङ्लङ्लिट इति लिट् । असिज्भ्यस्तेति झेर्जुस् । बाहुलकोऽदमागमः । लिटि वा तुजादित्वादभ्यासदीर्घत्वं । हि चेति निघातप्रतिषेधः ॥ किमर्थं । मेधसातये मेधस्य यागस्य संभजनाय ॥ सनोतेः क्तिनि जनसनखनामित्यात्वं । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं ॥ हे मघवन् धनवन् गिर्वणो गीर्भिर्वननीय सोऽस्माकं हवं स्तोत्रं सर्वपूर्वोक्तगुणस्त्वं शृणुधि । शृणु । बुध्यस्व । वेनो न ॥ वेनतिः कांतिकर्मा ॥ यथा कांतो जाराभिलाषः पुरुषः कामयितव्यायाः कामिन्या वचः शृणोति तद्वत् ॥ श्रुशृणुपृकृवृभ्य इति हेर्धित्वं । अन्येषामपीति सांहितिको दीर्घः ॥

॥ अथैकोनविंशी ॥

निरिंद्र बृहतीभ्यो वृत्रं धनुभ्यो अस्फुरः ।

निरर्बुदस्य मृगयस्य मायिनो निः पर्वतस्य गा आजः ॥ १८

निः। इंद्र। बृहतीभ्यः। वृत्रं। धनुभ्यः। अस्फुरः।

निः। अर्बुदस्य। मृगयस्य। मायिनः। निः। पर्वतस्य।

गाः। आजः॥ १९

हे इंद्र वृत्रमावरकमसुरं बृहतीभ्यो महद्भ्यः। लिंगव्यत्ययः॥ धनुभ्यो धनुर्भ्यः कोदंडेभ्यः॥ छांदसो रेफलोपः। हेतौ पंचमी॥ महद्भिर्धनुर्भिर्हेतुभिर्निरस्फुरः॥ स्फुरतिर्वधकर्मा॥ निरवधीः। निःशेषेण हतवानसि। यद्वा वृत्रमावरकं मेघं धनुभ्यः। धन्वंति गच्छंतीति धन्व आपः। ताभ्योऽद्भ्यः॥ तादर्थ्ये चतुर्थी॥ वृष्टीनामपां लाभार्थं निरवधीः। अपि च मायिनो मायाविनोऽर्बुदस्यैतन्नाम्नोऽसुरस्य मृगयस्यैतत्संज्ञकस्य च॥ अत्रापि कर्मणि षष्ठी॥ एतावसुरौ निरस्फुरः। निःशेषेणावधीः॥ मायाशब्दस्य व्रीह्यादिषु पाठात् व्रीह्यादिभ्यश्चेति मत्वर्थीय इनिः॥ तथा पर्वतस्य बलनाम्नासुरेण गवामपहरणाय निहितस्य गिरेः संबंधिनीर्गाः बलेनापहृता निराजः। निरगमयः॥ अज गतिक्षेपणयोः॥

॥ अथ विंशी॥

निरग्नयो रुरुचुर्निरु सूर्यो निः सोम इंद्रियो रसः।

निरंतरिक्षादधमो महामहिं कृषे तदिंद्र पौंस्यं॥ २०

निः। अग्नयः। रुरुचुः। निः। ऊं इति। सूर्यः। निः।

सोमः। इंद्रियः। रसः।

निः। अंतरिक्षात्। अधमः। महां। अहिं। कृषे। तत्।

इंद्र। पौंस्यं॥ २०

हे इंद्र महां महांतं कृत्स्नस्य जगतो व्यापकमहिमाहननशीलं वृत्रं यदा त्वमंतरिक्षादाकाशान्निरधमो निरगमयः॥ धमतिर्गतिकर्मा। तदानीं पौंस्यं वृत्रहनन-हेतुभूतं बलं कृषे। कुरुषे। पुरस्कुरुषे॥ करोतेश्छांदसो विकरणस्य लुक्॥ अग्नयश्च त्रिस्थानगता नो रुरुचुः। निःशेषेण दिदीपिरे। सूर्यः प्रेरक आदित्योऽपि

निःशेषेण दिदीपे। इंद्रिय इंद्रेण मेध्यो रसो रसात्मकोऽन्नमयः सोमश्च निःशेषेण दिदीपे। अग्न्यादयः सर्वे पूर्वं वृत्रेणावृतत्वान्निष्प्रभाः संत इदानीं तस्मिन्नावरके हते सम्यक् प्राकाशिषतेत्यर्थः॥

॥ इति पंचमस्य सप्तमेऽष्टाविंशो वर्गः॥

॥ अथैकविंशी॥

यं मे दुरिंद्रो मरुतः पाकस्थामा कौरयाणः।

विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानं॥ २१

यं। मे। दुः। इंद्रः। मरुतः। पाकऽस्थामा। कौरयाणः।

विश्वेषां। त्मना। शोभिष्ठं। उपऽइव। दिवि। धावमानं॥ २१

इदमादिकेन तृचेन कुरयाणपुत्रपाकस्थामनाम्नो राज्ञो दानं लब्ध्वा मेध्यातिथिस्तदीयं दानं स्तौति। यं यादृशं धनसंघं मह्यमिंद्रो मरुतश्च दुः दत्तवंतः तादृशमेव धनसमूहं कौरयाणः। शत्रून् प्रति युद्धाभिमुख्येन कृतं यानं हस्त्यश्वादिकं येनासौ कुरयाणः। तस्य पुत्रः कौरयाणः। पाकस्थामा। तिष्ठत्यनेनेति स्थाम बलं। परिपक्वबलः। एतन्नामको राजा मह्यं प्रादात्॥ ददातेर्लुङि गातिस्थेति सिचो लुक्। अडभावश्छांदसः॥ कीदृशं धनसंघं। विश्वेषां सर्वेषां धनानां मध्ये त्मनात्मना स्वत एव शोभिष्ठमतिशयेन शोभायुक्तं॥ मंत्रेष्वाङ्यादेरित्यात्मन आकारलोपः। शोभा-वच्छब्दादातिशायनिक इष्ठन्। विन्मतोर्लुक्। यस्येति लोपः॥ अतिशयेन शोभावत्त्वे दृष्टांतः। दिव्याकाश उपेव धावमानं प्रभाभिरुपेतं शीघ्रगामिनं सूर्यमिव। शोभावत्तममित्यर्थः॥

॥ अथ द्वाविंशी॥

रोहितं मे पाकस्थामा सुधुरं कक्ष्यप्रां।

अदाद्रायो विबोधनं॥ २२

रोहितं। मे। पाकऽस्थामा। सुऽधुरं। कक्ष्यऽप्रां।

अदात्। रायः। विऽबोधनं। २२

पाकस्थामा राजा रोहितं लोहितवर्णं वृषभमश्वं वा मे मह्यमदात्। दत्तवान्। कीदृशं। सुधुरं शोभनधुरं शोभनवहनयुक्तं॥ ऋक्पूर्वब्धूः। पा० ५, ४, ७४, इत्यकारः समासान्तः। क्रतादयश्चेति बहुव्रीहावुत्तरपदाद्युदात्तत्वं॥ कक्ष्याप्रं कक्षयाया कुसूलयोर्भ्रमणं। रज्जुः तस्याः प्रान्तं पूरयन्तं। पोषमित्यर्थः॥ प्रा पूरणे॥ रायो धनस्य विबोधनं विशेषेण बोधकं। बहुधनप्राप्तिहेतुमित्यर्थः उडिदमित्यादिना रायो विभक्तिरुदात्ता॥

॥ अथ त्रयोविंशी॥

यस्मा अन्ये दश प्रति धुरं वहन्ति वह्नयः।

अस्तं वयो न तुग्र्यं॥ २३

यस्मै। अन्ये। दश। प्रति। धुरं। वहन्ति। वह्नयः।

अस्तं। वयः। न। तुग्र्यं॥ २३

पूर्वोक्त एवाश्वो विशेष्यते। यस्मै॥ षष्ठ्यर्थे चतुर्थी॥ यस्याश्वस्य वृषभस्य वा धुरं वोढव्यं युगधुरमन्ये प्रकृतादश्वाद्विलक्षणा। दशसंख्याका वह्नयो वोढारोऽश्वा बलीवर्दा वा प्रतिनिधयः संतो वा वोढुं वहन्ति बिभ्रति। वह्निनामकत्वं वह्निने दृष्टान्तः। अस्तं। अस्यते क्षिप्यते तस्मिन्पदार्थजातमित्यस्तं गृहं। प्रति वयो न गंतारोऽश्वा यथा तुग्र्यं तुग्रपुत्रं भुज्युं समुद्रतीरदवहन् तद्वत्। तादृशमश्वं मह्यं प्रादादिति पूर्वस्मादृच्यन्वयः॥ युवमेतं चक्रथुः सिन्धुषु प्लवमात्मन्वन्तं पक्षिणं तौग्र्याय कं। येन देवत्रा मनसा निरूहथुः सुपप्तनी पेतथुः क्षोदसो महः॥ ऋग्वे० १, ११६, ४। इत्यादावनुसंधेयं। यद्वा यस्मा इति कर्मणि चतुर्थी। यं रथमन्ये दशसंख्याका वह्नयो वोढारोऽश्वा धुरं वहनप्रदेशं प्रति गताः संतो वहन्ति तादृशं रथमपि मह्यं दत्तवानित्यर्थः॥

॥ अथ चतुर्विंशी॥

आत्मा पितुस्तनूर्वास ओजोदा अभ्यञ्जनं।

तुरीयमिद्रोहितस्य पाकस्थामानं भोजं दातारमब्रवं॥ २४

आत्मा। पितुः। तनूः। वासः। ओजःऽदाः। अभिऽअञ्जनं।

तुरीयं। इत्। रोहितस्य। पाकऽस्थामानं। भोजं।

दातारं। अब्रवं॥ २४

हे इंद्र यत् यदि प्राक् प्राच्यां दिशि वर्तमानैः॥ सप्तम्यंताद्दिक्शब्दाद्दिग्देशका-लेष्वस्तातेरंचेर्लुक्। पा० ५. ३. ३०। इति लुक्॥ अपाक् प्रतीच्यां दिशि वर्त-मानैः। यदि वोदक् उदीच्यां दिशि वर्तमानैः। यद्वा न्यक् नीच्यां दिश्यधस्ताद्वर्त-मानैः॥ न्यधी इति नेः प्रकृतिस्वरत्वं। उदात्तस्वरितयोर्यणः इति परस्यानुदात्तस्य स्वरितत्वं॥ एवंभूतैर्नृभिः स्तोतृभिस्त्वं हूयसे स्वरक्षार्थमाहूयसे हे शिप्र शोभनहनो। शिप्र इति वै श्मश्रूण्याचक्षत इति वाजसनेयकं। यद्यप्येवं बहुभिराहूयसे तथाप्यानवे। आनुर्नाम राजा। तस्य पुत्रे राजर्षौ पुरु बहुलं नृतो नृभिरस्मदीयैः स्तोतृभिः प्रेरितोऽसि भवसि। राज्ञा हविष्करणे त्वां स्तोतारः प्रेरयंतीत्यर्थः॥ षू प्रेरणे। अस्मात् कर्मणि निष्ठा। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं॥ अपि च हे प्रशर्ध प्रकर्षेण शत्रूणामभिभवितरिंद्र तुर्वशे यदौ च राजनि नृभिः प्रेरितो भवसि॥

॥ अथ द्वितीया ॥

यद्वा रुमे रुशमे श्यावके कृप इंद्र मादयसे सचा।
कण्वासस्त्वा ब्रह्मभिः स्तोमवाहस इंद्रा यच्छंत्या गहि ॥ २

यत् वा। रुमे। रुशमे। श्यावके। कृपे। इंद्र। मादयसे।
सचा।
कण्वासः। त्वा। ब्रह्मऽभिः। स्तोमऽवाहसः। इंद्र। आ।
यच्छंति। आ। गहि ॥ २

यद्वा यद्यपि रुमादिषु चतुर्षु राजसु हे इंद्र त्वं सचा सह मादयसे माद्यसि तथापि स्तोमवाहसः स्तोमानां स्तोत्राणां वोढारः कण्वासः कण्वगोत्रा ऋषयो ब्रह्मभिः परिवृढकर्मभिः स्तोत्रैर्हविर्भिर्वा हे इंद्र त्वामायच्छंति। आगमयंति। यद्वा द्वितीयार्थे तृतीया। ब्रह्माणि हवींषि स्तोत्राणि वाभिमुख्येन प्रयच्छंति। ददति॥ दाण् दाने। पाघ्रादिना यच्छादेशः॥ अतस्त्वमायाहि। शीघ्रमागच्छ॥ गमेर्लोटि छांदसः शपो लुक्॥

चातुर्विंशेऽहनि माध्यंदिनसवनेऽच्छावाकशस्त्रे यद्वेति प्रगाथोऽनुरूपः। सूत्रितं च। यथा गौरो अपा कृतमित्यच्छावाकस्य। आ० ७. ४। इति॥

॥ तत्र प्रथमा मृक्तं तृतीया ॥

यथा गौर। अपा कृतं तृष्यन्नेत्यवेरिणं ।

आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ २

यथा । गौरः । अपा । कृतं । तृष्यन् । एति । अव । इरिणं ।

आऽपित्वे । नः । प्रऽपित्वे । तूयं । आ । गहि । कण्वेषु ।

सु । सचा । पिब ॥ २

गौरो गौरमृगस्तृष्यन् पिपासन् अपाभ्निरुदकैः ॥ व्यत्ययेनैकवचनं । उद्भिद-
चित्यादिना विभक्तेरदादेशः ॥ कृतं संपूर्णं कृतमिरिणं निम्नं तटाकदेशं यथा येन
प्रकारेणावैति अवगच्छति । अवशब्दोऽभिशब्दस्यार्थे । अभिमुखः सन् शीघ्रं गच्छति
तथापित्वे बंधुत्वे प्रपित्वे प्राप्ते सति हे इंद्र त्वं नोऽस्मान् तूयं क्षिप्रनामैतत् ।
शीघ्रमागच्छ । आगच्छ । आगत्य च कण्वेषु कण्वपुत्रेष्वस्मासु सचा सहैकत्रैव
विद्यमानं सवं सोमं सु सुष्ठु पिब ॥

॥ अथ

मंदंतु त्वा मघवन्निंद्रेंदवो राधोदेयाय सुन्वते ।

आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद्दधिषे सहः ॥ ४

मंदंतु । त्वा । मघऽवन् । इंद्र । इंदवः । राधःऽदेयाय ।

सुन्वते ।

आऽमुष्य । सोमं । अपिबः । चमू इति । सुतं । ज्येष्ठं ।

तत् । दधिषे । सहः ॥ ४

हे मघवन् धनवन्निंद्र इंदवः क्लेदनाः सोमास्त्वां मंदंतु । मादयंतु हर्षयंतु ॥
मदेर्ण्यंत्ययेन परस्मैपदं ॥ किंच सुन्वते सोमाभिषवं कुर्वते यजमानाय राधोदेयाय
राधसो धनस्य दानार्थं ॥ ददातेरचो यदिति भावे यत् । ईद्यतीतीकारः । ततोऽस्मा

स स्वर्गाऽइव । मघवन् । यवऽयुमती । यः । ते । आनट् ।

उपऽस्तुतिं

पुत्रं । प्रावर्गं । कृणुते । सुऽवीर्ये । दाश्नोति । नमउक्तिऽभिः ॥ ६

हे इंद्र मे ममोपस्तुतिं स्तोत्रं यः स्तुम आनट् प्राप्नोति त्वां प्रापयति ॥ अश्नोतेर्लिङि व्यत्ययेन परस्मैपदं ॥ सचने सचतेरिति ॥ षच समवाये ॥ सक्तुरिवैव यथा सक्तुसंस्कृतेन यवेन तथा स्वयं । यश्च यजमानो नमउक्तिभिर्नमस्कारवचनैः स्तोत्रैः सार्कं दाश्नोति हवींषि तुभ्यं ददाति ॥ दाशृ दाने । स यजमानः सुवीर्ये शोभनवीर्ययुक्ते संग्रामे प्रावर्गं प्रकर्षेण शत्रूणां वर्जयितारं पुत्रं कृणुते । करोति । उत्पादयति । त्वत्प्रसादाल्लभत इत्यर्थः ॥ प्रपूर्वाद्वृजेः कर्मण्यण्युटो बहुलमिति कर्तरि घञ् । उपसर्गस्य घञ्यमनुष्ये इति दीर्घः । थाथादिनोत्तरपदांतोदात्तत्वं ॥ यद्वा सुवीर्यं इत्येतत्पुत्रस्य विशेषणं ॥ द्वितीयार्थे सप्तमी ॥ शोभनवीर्यं पुत्रं ॥ बहुव्रीहौ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं ॥

॥ अथ सप्तमी ॥

मा भेम मा श्रमिष्मोग्रस्य सख्ये तव ।

महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुं ॥ ७

मा । भेम । मा । श्रमिष्म । उग्रस्य । सख्ये । तव ।

महत् । ते । वृष्णः । अभिऽचक्ष्यं । कृतं । पश्येम । तुर्वशं ।

यदुं ॥ ७

हे इंद्र उग्रस्योद्गूर्णबलस्य तव सख्ये सखित्वे सति वयं मा भेम । मा भैष्म । कुतश्चिदपि भीता मा भूम । मा श्रमिष्म । श्रांताः पीडिताश्च मा भूम । वृष्णः कामानां वर्षितुस्ते तव संबंधि महत्प्रभूतं कृतं शत्रुवधादिलक्षणं कर्माभिचक्ष्यं । अभितः ख्यापनीयं स्तोतव्यं । अतो महानुभावस्य तव सख्यं प्राप्ताः भीतिश्रमौ न जायेते इत्यर्थः । तत्कथमवगम्यत इति चेदुच्यते । तुर्वशमेतन्नामकं राजर्षिं यदुनामकं च त्वत्प्रसादात्सुखेन जीवंतौ पश्येम । दृष्टवंतः खलु वयं । अतः कारणात्त्वत्सख्यं प्राप्तस्य भयादिकं न जायत इत्येतदुपपन्नमित्यर्थः ॥

॥ अथाष्टमी ॥

सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति ।

मध्वा संपृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥ ८

सव्यां । अनु । स्फिग्यं । ववसे । वृषा । न । दानः । अस्य ।

रोषति ।

मध्वा । संऽपृक्ताः । सारघेण । धेनवः । तूयं । आ । इहि ।

द्रव । पिब ॥ ८

वृषा कामानां वर्षितेंद्रः सव्यां दक्षिणेतरां स्फिग्यं कटिप्रदेशमनु ॥ तृतीयार्थेऽनोः कर्मप्रवचनीयत्वं ॥ सव्यया स्फिग्या शरीरैकदेशेनैव वावसे । वस्ते । सर्वभूतजात-माच्छादयति । स्वयं कृत्स्नं जगदतीत्य वर्तत इत्यर्थः । निगमांतरं च भवति । यदन्यया स्फिग्या क्षामवस्थाः । ऋग्वे० १. ५२. ११. । इति । अपि च दानोऽव-खंडयिता ॥ दान अवखंडने ॥ पचाद्यच् ॥ स चास्येमिंद्रं न रोषति । न हिनस्ति ॥ रिष रुष हिंसायां ॥ इंद्रं हिंसितुं शक्तः कश्चिदपि नास्तीत्यर्थः । यद्वा । दानो हविषां दाता । यजमानश्चास्येंद्रस्य न रोषति । रोषं न जनयति । सर्वदा हविर्भिः परिचरतीत्यर्थः । उत्तरोऽर्धर्चः प्रत्यक्षकृतः । सारघेण । सरघा मधुमक्षिका । तत्संबंधिना मध्वा मधुना । लुप्तोपमानमेतत् । मधुनेव रसवता क्षीरादिना श्रयण-द्रव्येण संपृक्ताः संसृष्टाः संस्कृता धेनवो धेनुवत् प्रीतिजनका अस्मदीयाः सोमाः । यद्वा धिवेः प्रीणनार्थाद्धेनवः । प्रीणयितार इत्यर्थः । यत एवमतः कारणात् हे इंद्र तूयं क्षिप्रमेहि । अस्मत्समीपमागच्छ । आगत्य च द्रव । सोमा यस्मिन्नुत्तर-वेदिलक्षणे स्थाने हूयंते तं देशं शीघ्रं गच्छ ॥ द्रु गताविति धातुः । द्व्यचोऽतस्तिङ इति सांहितिको दीर्घः ॥ तदनंतरमध्वर्युणा दत्तं सोमं पिब । तेन सोमेन सम्यक् स्वोदरं पूरयेत्यर्थः ॥

॥ अथ नवमी ॥

अश्वी रथी सुरूप इद्गोमाँ इदिंद्र ते सखा ।

श्वात्रभाजा वयसा सचते सदा चंद्रो याति सभामुप ॥ ९

अश्वी । रथी । सुऽरूपः । इत् । गोऽमान् । इत् । इंद्र । ते । सखा ।

श्वात्रऽभाजा । वयसा । सचते । सदा । चंद्रः । याति । सभां । उप ॥ ९

हे इंद्र ते तव सखा [illegible] पुरुषोऽश्वादिगुणैर्विशिष्ट एव भवति । [illegible] [illegible]कर्मभिः संबध्यते । अश्व[illegible] [illegible] एव भवति । न कदाचिदश्वैर्वियुज्यते । रथी रथवानेव स भवति । [illegible] इत् शोभनरूपः शोभनावयव एव स भवति । गोमां इत् बह्वीभिर्गोभिर्युक्त एव स भवति । न कदाचिद्गोभिर्वियुज्यत इत्यर्थः । अपि च श्वात्रभाजा । श्वात्रमिति धननाम । आश्रयणीयं शीघ्रं प्राप्तव्यं शोभनं धनं संभजतेऽन्नसंयुक्तेन वयसा । वय इत्यन्ननामैतत् । अन्नेन स सर्वदा सचते । सचतिः । संगच्छते ॥ षच समवाये ॥ अत एव चंद्रः सर्वेषामाह्लादकः सन् सभां जनसंसद-मुपयाति । उपगच्छति ॥

॥ अथ दशमी ।

ऋश्यो न तृष्यन्नवपानमा गहि पिबा सोमं वशाँ अनु ।

निमेघमानो मघवन्दिवेदिव ओजिष्ठं दधिषे सहः ॥ १०

ऋश्यः । न । तृष्यन् । अवऽपानं । आ । गहि । पिब ।

सोमं । वशान् । अनु ।

निऽमेघमानः । मघऽवन् । दिवेऽदिवे । ओजिष्ठं । दधिषे ।

सहः ॥ १०

हे इंद्र ऋश्यो न ऋश्य [illegible] मृग इव तृष्यन् पिपासन् त्वमवपानमवनीतं चमसादिषु पात्रेष्वानीतं पातव्यं सोमम् आ गहि । अभिगच्छ । गत्वा च तमस्मदीयं सोमं वशाँ अनु अनुकामं यथाकामं पिब । यावता पीतेन पर्याप्तिर्जायते तावता सोमेन जठरं पूरयेत्यर्थः । अत एव सोमपानात् प्राप्तबलस्त्वं दिवे दिवे प्रतिदिवसं निमेघमानो [illegible] [illegible] सिंचन् हे मघवन्निंद्र ओजिष्ठमोजस्वित-

दाशुरिदाश्वान्॥ दाशतेरौणादिक उरिन्॥ हविषां दाता स यजमानलक्षणो जनः स्वयं पिब् स्वयमेवात्मनैव मन्यते। सर्वं जानाति। पराधीनप्रज्ञो न भवतीत्यर्थः। यस्मिन्यज्ञे सोमस्य पानेन हे इंद्र त्वं तृपसि तस्य स॥ तृप तृम्प तृप्तौ। तौदादिकः। शे तृंफादीनां। पा० ७. १. ५९. १.। इति नुम्॥ ते त्वदीयं युज्यं योग्यमिदमस्मदीयं सोमलक्षणमन्नं सगुणितं सख्यकं पात्रेष्वासिक्तं॥ उच्च शोचने। कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं॥ अमत्रं तादृशं सोममेहि। अभिगच्छ। प्रद्रुव। शीघ्रं प्राप्नुहि। तदनंतरं पिब। पानं कुरु॥

॥ अथ त्रयोदशी ॥

रथेष्ठायाध्वर्यवः सोममिंद्राय सोतन।
अधि ब्रध्नस्याद्रयो वि चक्षते सुन्वंतो दाश्वध्वरं॥ १३

रथेऽस्थाय। अध्वर्यवः। सोमं। इंद्राय। सोतन।
अधि। ब्रध्नस्य। अद्रयः। वि। चक्षते। सुन्वंतः।
दाशुऽअध्वरं॥ १३

रथेष्ठाय। रथे तिष्ठतीति रथेष्ठः॥ सुपि स्थ इति कप्रत्ययः। तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक्॥ एवंलक्षणायेंद्राय हे अध्वर्यवः सोमं सोतन। अभिषुणुत॥ षुञ् अभिषवे। तप्तनप्तनथनाश्चेति तनबादेशः॥ ब्रध्नस्य बुध्नस्य मूलस्याभिषवाधिकरणस्य स्थापितस्योपराख्यस्य निम्नतस्याग्रमनोऽध्युपर्यद्रयोऽध्यायानाध्यत्वग्रावाणः दिशु वर्तमाना दाश्वध्वरं दाशोदातृयजमानस्याध्वरो यागो येन निष्पद्यते तादृशं सोमं सुन्वंत ऋत्विग्भिरेवेत्थं स्वयमेवाभिषुण्वंतो वि चक्षते। विशेषेण प्रकाशंते। सामाभिषवेऽनियमेनानुकूला वर्तंत इत्यर्थः। अथवाद्रय ऋत्विग्भिरेवाध्वर्यवः सोममभिषुण्वंतीति योज्यं॥

॥ अथ चतुर्दशी ॥

उप ब्रध्नं वावाता वृषणा हरी इंद्रमपसु वक्षतः।
अर्वांचं त्वा सप्तयोऽध्वरश्रियो वहंतु सवनेदुप॥ १४

उपं। ब्रह्म। ववाता। वृषणा। हरी इति। इंद्रं। अपऽसु।

वक्षतः।

अर्वांचं। त्वा। सप्तयः। अध्वरऽश्रियः। वहंतु। सवना।

इत्। उपं ॥ १४

अध्वानं तरितुं ववाता संभक्तारौ॥ वनतेर्निष्ठायां छांदसं द्विर्वचनमिडभाव आत्वं धातुस्वरश्च। अन्येषामपि दृश्यत इति सांहितिकोऽभ्यासदीर्घः। यद्वा ववाता पुनःपुनर्गंतारौ॥ वा गतिगंधनयोः। अस्माद्यङ्लुगंतात्कर्तरि निष्ठा॥ वृषणा वृषणौ सेक्तारौ हरी हरणशीलावश्वावुक्तगुणौ संतावपस्वदोयेषु कर्मसु॥ अपसुशब्दः सकारांतः कर्मवचनः। पीवोपवसनानां छंदसि लोपो वक्तव्य इतीह सकारो लुप्यते॥ तस्मिन्निंद्रमुपवक्षतः। उपवहतां। उपानयतां॥ वहतेर्लेट्यडागमः। सिब्बहुलमिति सिप्॥ अपि चाध्वरश्रियोऽध्वरं श्रयमाणाः सप्तयः सर्पणशीला अन्येऽपि त्वदीया अश्वाः सवना सवनानि प्रातःसवनादीन्यध्वरसंबंधीनि प्रति हे इंद्र त्वामर्वांचमभिमुखमुपवहंतु। उपगमयंतु। इदिति पूरणः॥

॥ अथ पंचदशी ॥

प्र पूषणं वृणीमहे युज्याय पुरूवसुं।

स शक्र शिक्ष पुरुहूत नो धिया तुजे राये विमोचन ॥ १५

प्र। पूषणं। वृणीमहे। युज्याय। पुरुऽवसुं।

सः। शक्र। शिक्ष। पुरुऽहूत। नः। धिया। तुजे। राये।

विऽमोचन ॥ १५

इदमाद्याश्चतस्र ऋचः पूष्ण इंद्रस्य च लिंगसद्भावादेता उभयथा व्याख्यायंते। पुरूवसुं बहुधनं पूषणं पोषकमिंद्रं यद्वैतन्नामकं देवं प्र वृणीमहे। प्रकर्षेण संभजामहे। किमर्थं। युज्याय। युंक्त इति युक् सखा। तस्य भावाय। सखित्वायेत्यर्थः। हे शक्र शक्त पुरुहूत बहुभिराहूत हे विमोचन पापाद्विमोचयितरिंद्र पूषन्वा स त्वं नोऽस्मान् धियात्मीयया बुद्ध्या शिक्ष। शक्तान् कर्तुमिच्छ। किमर्थं। राये धनाय

धनप्राप्त्यर्थं तुजे गन्तृन् गोऽजयितुं हिंसितुं ॥ तुज हिंसायां गमात्कृत्यार्थे केन्प्रत्ययः ॥ यद्वा रायं इति क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी। आमायेकवचनं रायो धनानि धिया स्तुत्या प्रीतः सन् नोऽस्मभ्यं। शिक्ष। देहि॥ शिक्षति-दानकर्मा। ऊडिदमिति रायो विभक्तिरुदात्ता ॥

॥ इति पंचमस्य सप्तमे द्वाविंशो वर्गः ॥

॥ अथ षोडशी ॥

सं नः शिशीहि भुरिजोरिव क्षुरं रास्व रायो विमोचन।

त्वे तन्नः सुवेदमुस्रियं वसु यं त्वं हिनोषि मर्त्यं ॥ १६

सं। नः। शिशीहि। भुरिजोःऽइव। क्षुरं। रास्व। रायः।

विऽमोचन।

त्वे इति। तत्। नः। सुऽवेदं। उस्रियं। वसु। यं। त्वं।

हिनोषि। मर्त्यं ॥ १६

हे इंद्र पूषन्वा नोऽस्मान् सं शिशीहि। सम्यक् तीक्ष्णय। संज्ञानवतो कुरु। भुरिजोरिव। बाहुनामैतत्। नापितस्य बाह्वोरिव स्थितं क्षुरमिव। अपि च हे विमोचन पापाद्विमोचन पापाद्विमोचयितः रायः धनानि रास्व। अस्मभ्यं देहि॥ रा दाने॥ तत्कस्य हेतोः। त्वे त्वयि खलु स्थितं। उस्रा गावः। तत्संबद्धं तद्युक्तं निष्पादकं धनं नोऽस्माकं सुवेदं सुलभं नान्येषु देवेषु। यं धनसमूहं मर्त्यं मनुष्यं स्तोतारं प्रति त्वं हिनोषि प्रेरयसि तद्धनं त्वयीत्यन्वयः। यत एवं तस्माद्रास्वेति योज्यं॥

॥ अथ सप्तदशी ॥

वेमि त्वा पूषन्नृंजसे वेमि स्तोतव आघृणे।

न तस्य वेम्यरणं हि तद्वसो स्तुषे पज्राय साम्ने ॥ १७

वेमि। त्वा। पूषन्। ऋंजसे। वेमि। स्तोतवे। आघृणे।

न। तस्य। वेमि। अरणं। हि। तत्। वसो इति। स्तुषे।

पज्राय। साम्ने। १७

हे पूषन् पोषक देव एतन्नामक हे देव त्वा त्वामृंजसे प्रसाधयितुं वेमि। कामये। आघृणे आगतदीप्ते स्तोतवे त्वा स्तोतुं वेमि। कामये। यस्त्वद्व्यतिरिक्तं देवतांतरं तस्य स्तोत्रं न वेमि। न कामये। यत्कुत इति चेत्। हि यस्मादरणमरमणमसुखकरं। अतस्त्वामेव स्तोतुं कामय इत्यर्थः। हे वसो वासक स्तुषे स्तुवते पज्राय प्रार्जकाय स्तोत्राणां साम्ने। साम स्तोत्रं। सामर्थ्यादत्र महान् लक्ष्यते। महते। यद्वा पज्र इति कक्षीवत आख्या। आम्नातं हि। यद्वां पज्रासो अश्विना हवंते। ऋग्वे० १. ११७. १०. । इति। तस्मै कक्षीवत इव मह्यं। सामर्थ्यादुपमार्थो लभ्यते। अपेक्षितं धनं देहीति शेषः॥

॥ अथाष्टादशी ॥

परा गावो यवसं कच्चिदाघृणे नित्यं रेक्णो अमर्त्य।

अस्माकं पूषन्नविता शिवो भव मंहिष्ठो वाजसातये ॥ १८

परा। गावः। यवसं। कत्। चित्। आघृणे। नित्यं।

रेक्णः। अमर्त्य।

अस्माकं। पूषन्। अविता। शिवः। भव। मंहिष्ठः।

वाजऽसातये ॥ १८

हे आघृणे आगतदीप्ते पूषन्देव मा कच्चित् कस्मिंश्चित्कालेऽस्मदीया गावो यवसं तृणं भक्षितुं परा गच्छंति। हे अमर्त्य अमरण देव तदानीं रेक्णस्तद्रूपं धनं नित्यमस्माकं ध्रुवमस्तु। चोरव्याघ्रादिभिर्हिंसितं मा भूत्। अपि च हे पूषन् पोषयितरस्माकमविता रक्षिता भूत्वा शिवः सुखकरो भव। तथा वाजसातये वाजस्यान्नस्य बलस्य वा संभजनाय मंहिष्ठो दातृतमो भव॥

॥ अथैकोनविंशी ॥

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।

राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि ॥ १९

स्थूरं । राधः । शतऽअश्वं । कुरुङ्गस्य । दिविष्टिषु ।

राज्ञः । त्वेषस्य । सुऽभगस्य । रातिषु । तुर्वशेषु ।

अमन्महि ॥ १९

इदमादिकेन तृचेन देवातिथिः कुरुङ्गनाम्नो राज्ञो दानं स्तौति । कुरुङ्गस्य । कुरून् जेतुं गच्छति कुरुं गच्छतीति वा कुरुङ्गः ॥ डोऽन्यत्रापि दृश्यत इति गमेर्डः । पृषोदरादिः ॥ एवंभूतस्य त्वेषस्य दीप्तस्य सुभगस्य शोभनभजनस्यैवंभूतस्य राज्ञः संबन्धिनीषु दिविष्टिषु दिवः स्वर्गस्यैषणेषु प्राप्तिहेतुभूतासु यागक्रियासु रातिषु दानेषु दक्षिणारूपेषु मध्ये तुर्वशेषु । मनुष्यनामैतत् ॥ निर्धारणे सप्तमी । मनुष्येषु मध्ये वयं स्थूरं स्थूलं प्रभूतं शताश्वमश्वानां शतेन युक्तं राधो धनममन्महि । अमा।सम्र । अलभामहीत्यर्थः ॥

॥ अथ विंशी ॥

धीभिः सातानि काण्वस्य वाजिनः प्रियमेधैरभिद्युभिः ।

षष्टिं सहस्रानु निर्मजामजे निर्यूथानि गवामृषिः ॥ २०

धीभिः । सातानि । काण्वस्य । वाजिनः । प्रियऽमेधैः ।

अभिद्युऽभिः ।

षष्टिं । सहस्रा । अनु । निःऽमजां । अजे । निः । यूथानि ।

गवां । ऋषिः ॥ २०

काण्वस्य कण्वपुत्रस्य वाजिनो हविष्मतो मेधातिथेः संबंधिभिर्धीभिर्व्याहृतिभिः स्तोतृभिः सात्तानि संभक्तान्यभिद्युभिरभिगतदीप्तिभिः प्रियमेधैरेतस्य चैव ऋषिभिः संचितानि निमंत्रां निःशेषेण भुक्तानि गवां षष्टिं सहस्रा षष्टिसंख्याकानि सहस्राणि यूथान्यूर्ध्वानि शालिथिरहमनु पश्चात् निरजे। निःशेषेणागच्छं। साकल्येन प्राप्तवानस्मि ॥ अज गतिक्षेपणयोः ॥ यथा प्रियमेधानां काण्वानां च गवां यूथानि राज्ञा दत्तानि तत्प्रतिगृहीतं एवं तेन दत्तानि मया प्रतिगृहीतं इत्यर्थः ॥

॥ अथैकविंशी ॥

वृक्षा॑श्चिन्मे अ॒भिपि॑त्वे अरारणुः ।

गां भ॑जन्त मे॒हनाश्वं॑ भजन्त मे॒हना ॥ २१

वृ॒क्षाः । चि॒त् । मे॒ । अ॒भिऽपि॑त्वे । अ॒र॒र॒णुः ।

गाम् । भ॒ज॒न्त॒ । मे॒हना॑ । अश्व॑म् । भ॒ज॒न्त॒ । मे॒हना॑ ॥ २१

मे ममाभिपित्वे पूर्वोक्ते धनेऽभिप्राप्ते सति वृक्षाश्चित् वृक्षा अप्यरारणुः । अशब्दयन् । कथमिति तदाह । इम ऋषयो मेहना मंहनीयां प्रशस्तां गां भजंत । अलभंत । मेहना मंहनीयमश्वं च भजंत । अलभंतेति ॥ गामश्वमिति जात्यभिप्रायमेकवचनं ॥ यद्वा मेहनेति म इह नेति पदत्रयात्मकमेकं पदं । यदाह यास्कः । यदिदं चिन्मे मंहनीयं धनमस्ति । यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि ॥ तदेवं व्याख्यायं । इम ऋषयो गामश्वं चाभजंत । इहास्मिन्नागते प्रियमेधस्य धनस्य सहायं मम न सोऽस्मि नासीदिति वृक्षप्रमुखाः सर्वेऽपि जनाः प्रोचुरित्यर्थः ॥

॥ इति पंचमस्य सप्तमे त्रयस्त्रिंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पंचमाष्टके सप्तमोऽध्यायः समाप्तः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथाष्टमो व्याख्यानमारभ्यते । अष्टमे मंडले प्रथमेऽनुवाके चत्वारि सूक्तानि व्याख्यातानि । दूरादित्येकोनचत्वारिंशदृचं पंचमं सूक्तं कण्वगोत्रस्य ब्रह्मातिथेरार्षं । आदितः षट्त्रिंशद्गायत्र्यः । ततो द्वे बृहत्यौ । अंतिमानुष्टुप् । अंत्येषु पंचस्वर्धर्चेषु चैदिपुत्रस्य कशुनाम्नो राज्ञो दानं स्तूयते । अतस्तद्देवताकाः । शिष्टा आश्विन्यः । तथा चानुक्रांतं । दूरादेकाधचत्वारिंशद्ब्रह्मातिथिराश्विनं द्विबृहत्यनुष्टुबंतमंत्याः पंचार्धर्चाश्चैद्यस्य कशोर्दानस्तुतिरिति ॥ प्रातरनुवाक आश्विनशस्त्रयोराश्विने क्रतौ गायत्रे छंदस्यस्य वर्गमिदं सूक्तं । सूत्र्यते हि । दूरादिहेवेति तिस्र उत्तमा उद्धरेत् । आ० ४. १५. । इति ॥

॥ तत्र प्रथमा ॥

दूरादिहेव यत्सत्यरुणप्सुरशिश्वितत् ।

वि भानुं विश्वधातनत् ॥ १

दूरात् । इहऽइव । यत् । सती । अरुणऽप्सुः । अशिश्वितत् ।

वि । भानुं । विश्वधा । अतनत् ॥ १

दूरात् दूरदेशे एव विप्रकृष्ट एव नभसः प्राक्प्रदेशे वर्तमानेऽपि समीपे विद्यमानेव ॥ पंचम्यर्थे अलुक्समासप्रकरणे स्तोकाद्यर्थे । अत्र नद्याद्युदात्तं ॥ अरुणप्सुरारोचमानरूपा । ईदृग्भूता यद्यदाशिश्वितत् अश्वेतयत् ॥ श्विता वर्णे । अस्माण्णिजंतात् लुङि चङि रूपं । यद्वृत्तयोगादनिघात इति निघातप्रतिषेधः ॥ तदा भानुं दीप्तिं विश्वधा बहुविधं व्यतनत् । विस्तारितवती ॥ तनोतेर्लङ्यत्ययेन शप् ॥ ईदृशीमुषसं हे अश्विनौ सचेथे इत्युत्तरेणैकवाक्यता । यद्वा प्रातरनुवाकस्य वचनेन कांडेनोषा स्तुता सती प्रादुर्बभूव । हे अश्विनौ यांसिष्यमाणामाश्विनं क्रतुं ओषु युवामपि प्रादुर्भवतमित्यध्याहारेण वाक्यं पूरणीयं ॥

॥ अथ द्वितीया ॥

नृवद्दस्रा मनोयुजा रथेन पृथुपाजसा ।

सचेथे अश्विनोषसं ॥ २

नृऽवत् । दस्रा । मनःऽयुजा । रथेन । पृथुऽपाजसा ।

सचेथे इति । अश्विना । उषसं ॥ २

हे दस्रा दस्रौ दर्शनीयौ शत्रूणामुपक्षपयितारौ वा ॥ सुपां सुलुगिल्याकारः ॥ ईदृशौ हे अश्विनावश्विनौ नृवत् नृभिर्नेतृभिस्तुल्यं यतमानौ युवां ॥ तेन तुल्यमिति प्रथमार्थे वतिः ॥ यद्वा नृवतौ ॥ नृवच्छब्दान्मतुपश्छांदसत्वं । रश्मिमतामाभ्यां कंदसीर इति वत्वं । छोपश्छांदसो लुक् । पश्चनुद्वयं मतुपिति मतुप उदात्तत्वं ॥ ईदृशीमुषसं रथेनात्मीयेन वाहनेन सचेथे । सम्यगागच्छथः ॥ सच समवाये ॥ यद्वा सचतिः सेवनार्थः । सचेथे । सेवेथे । तदाह यास्कः । सचस्वा नः स्वस्तय सेवस्व नः स्वस्तय इति । कीदृशेन रथेन । मनोयुजा मनसैव व्यापारांतरनिरपेक्षेण अरणात्मनेवाश्वैर्युज्यमानेन पृथुपाजसा विस्तीर्णबलेन बहुलेन वा उषस ऽनंतर-मश्विनोः स्तूयमानत्वात्तामश्विनौ गच्छत इत्युच्यते ॥

॥ अथ तृतीया ॥

युवाभ्यां वाजिनीवसू प्रति स्तोमा अदृक्षत ।

वाचं दूतो यथोहिषे ॥ ३

युवाभ्यां । वाजिनीवसू इति । वाजिनीऽवसू । प्रति ।

स्तोमाः । अदृक्षत ।

वाचं । दूतः । यथा । ओहिषे ॥ ३

हे वाजिनीवसू । वाजो हविर्लक्षणमन्नं । तद्युक्ता यागक्रिया वाजिनी । तस्यां वसु धनं ययोरस्ति तौ तथोक्तौ । यद्वाबहुलं स्तोतृभ्यो देयं वसु धनं ययोरस्ति तादृशौ । हे अश्विनौ युवाभ्यां स्तोमा अस्माभिः कृतानि स्तोत्राणि प्रत्यदृक्षत ।

प्रतिष्ठयंतां ॥ छन्दसि लुङ्लङ्लिट इति प्रार्थनायां लुङ् । लिङ्थे लेट् । लेटोऽडाटौ इत्याडागमः । वैतोऽन्यत्र इत्यैकारः । इतश्च लोपः परस्मैपदेषु इत्यकारलोपः । संयोगान्तलोपः । अहं च सख्य येन प्रकारेण दूतः प्रेष्टा वाचं स्वामिनो वाक्यं प्रापयति तथा युवयोः प्रीतिपूर्वं काव्यं वाचमीरये ॥ पुरुषव्यत्ययः ॥ याचे ॥ चहिरदाने याचन इत्यर्थः । व्यत्ययेनात्मनेपदं ॥ यद्वा दूतो यथा स्वामिनोक्ता वाचं विरोधस्थमन्यं प्रापयति एवमहमपि स्तुतिरूपां वाचमीरये । वच्मि । युवां प्रापयामि ॥ वहेर्व्यत्ययेन मध्यमः छान्दसं संप्रसारणं । इदन्तो मसि इत्यादिवत् इडागमः । गुणाभावो लघूपधगुणश्च । एङि पररूपमिति पररूपत्वं ॥

॥ अथ चतुर्थी ॥

पुरुप्रिया णो ऊतये पुरुमंद्रा पुरुवसू ।

स्तुषे कण्वासो अश्विना ॥ ४

पुरुऽप्रिया । नः । ऊतये । पुरुऽमंद्रा । पुरुवसू इति पुरुऽवसू ।

स्तुषे । कण्वासः । अश्विना ॥ ४

पुरुप्रिया बहूनां प्रियौ पुरुमंद्रा बहुमदौ बहूनां मादयितारौ वा । यद्वा पुरु बहुलं माद्यंतौ पुरुवसू बहुधनौ । ईदृशावश्विनावश्विनौ नः अस्माकमूतये रक्षणाय कण्वासः कण्वगोत्रा वयं स्तुषे । स्तुमहे ॥ पुरुषवचनयोर्व्यत्ययः ॥ यद्वा कण्वास इत्येतद् बहुवचनं । ऋषिरात्मानं संबोध्य ब्रूते । हे अंतरात्मन् कण्वास कण्वगोत्रोत्पन्न स्तुषे । अश्विनौ स्तुहि ॥

॥ अथ पंचमी ॥

शंचिष्ठा वाजसातमेषयंता शुभस्पती ।

गंतारा दाशुषो गृहं ॥ ५

शंचिष्ठा । वाजऽसातमा । इषयंता । शुभः । पती इति ।

गंतारा । दाशुषः । गृहं ॥ ५

संश्लिष्टा संश्लिष्टौ मंहनीयौ पूजनीयौ यद्वा द्रष्टव्यौ [illegible]। [illegible] बलं वा । तद्वातिशयेन दातारौ । यद्वा [illegible] स्तोत्रस्य [illegible] ॥ [illegible] सनतेर्वा जनसनेति विट् । विड्वनोरनुनासिकस्यात्वं ॥ दस्रयंता स्तोतृभ्य इष्टफलं कुर्वंतौ ॥ दस उपक्षये । तत्करोतीति णिच् । [illegible] टिलोपे प्राप्ते प्रकृत्यैकाजिति प्रकृतिभावः ॥ यद्वा [illegible] प्रापयंतौ ॥ दस गतौ । [illegible] ष्णिच् । संज्ञापूर्वकस्य विधेरनित्यत्वाद् [illegible] । शुभः शोभनस्य धनस्य उदकस्य वा पती स्वामिनौ ॥ षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य सः ॥ दाशुष इत्यादि [illegible] दत्तवतो यजमानस्य [illegible] ॥ [illegible] । अतो न लोकाव्ययेति कर्मणि षष्ठ्याः प्रतिषेधः ॥ [illegible] स्तुत इति शेषः ॥

॥ इति पंचमस्याष्टमे प्रथमो वर्गः ॥

॥ अथ षष्ठी ॥

ता सुदेवाय दाशुषे सुमेधामवितारिणीम् ।

घृतैर्गव्यूतिमुक्षतं ॥ ६ ॥

ता । सुऽदेवाय । दाशुषे । सुऽमेधाम् । अविऽतारिणीम् ।

घृतैः । गव्यूतिम् । उक्षतं ॥ ६ ॥

हे अश्विनौ ता तौ युवां [illegible] सुदेवाय । शोभना देवा [illegible] यस्याः स तथोक्तः ॥ बहुव्रीहौ [illegible] दाशुषे हवींषि दत्तवते यजमानाय ॥ तादर्थ्ये चतुर्थी ॥ ईदृग्यजमानार्थं सुमेधां शोभनयज्ञादिकारिणीं [illegible] वितरणं विगमनमपाय । अनपायिनीं ॥ नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं ॥ ईदृशीं गव्यूतिं । गावो यत्र संयुज्यंते [illegible] ॥ [illegible] छंदसोऽयवादेशः ॥ तां घृतैः [illegible] । [illegible] सेचने ॥

॥ अथ सप्तमी ॥

आ नः स्तोममुप द्रवत्तूयं श्येनेभिराशुभिः ।

यातमश्वेभिरश्विना ॥ ७ ॥

आ। नः। स्तोमं। उपं। द्रवत्। तूयं। श्येनेभिः। आशुऽभिः॥

यातं। अश्वैभिः अश्विना॥ ७

हे अश्विनाश्विनौ नोऽस्माकं स्तोमं स्तोत्रमश्वेभिरश्वैः। द्रवत् तूयमित्युभे क्षिप्रनामनी। एकः पूरकः। तूयं क्षिप्रमुपायातं। उपगच्छतं। यद्वा द्रवदिति स्तोमविशेषणं। द्रवत् शीघ्रं प्रवर्तमानं स्तोत्रमित्यर्थः। कीदृशैरश्वैः। श्येनेभिः शंसनीयगामिभिः प्रशस्तगमनैराशुभिः शीघ्रगैः॥

॥ अथाष्टमी॥

येभिस्तिस्रः परावतो दिवो विश्वानि रोचना।

त्रीरक्तून्परिदीयथः॥ ८

येभिः। तिस्रः। पराऽवतः। दिवः। विश्वानि। रोचना।

त्रीन्। अक्तून्। परिऽदीयथः॥ ८

हे अश्विनौ तिस्रो दिवस्त्रीन्दिवसान् त्रीनक्तून् तिस्रो रात्रीश्च॥ अत्यंतसंयोगे द्वितीया॥ एतावंतं कालं विश्वानि सर्वाणि व्याप्तानि वा रोचना रोचमानानि नक्षत्राणि देवस्थानानि परावतो दूरदेशाद्येभिर्यैरश्वैः परिदीयथः परिगच्छथः॥ दीयतिर्गतिकर्मा॥ तैरस्मात् स्तोत्रमुपयातमिति पूर्वेणान्वयः॥

॥ अथ नवमी॥

उत नो गोमतीरिष उत सातीरहर्विदा।

वि पथः सातये सितं॥ ९

उत। नः। गोऽमंतीः। इषः। उत। सातीः। अहःऽविदा।

वि। पथः। सातये। सितं॥ ९

उतापि च हे चर्षणिदा अश्विनौ संभजितारौ। यद्वाद्य प्रभातसमये वेदितव्यौ स्तोतव्यौ नोऽस्मभ्यं गोमतीं बहुभिर्गोभिर्युक्ता इषोऽन्नानि दत्तमिति शेषः। उतापि च सातौ संभजनीया दातव्या वा रायश्चास्मभ्यं दत्तं॥ सनतेः सनं तेर्वा कर्मणि क्तिन्। जनसनखनामित्यात्वं। ऊतियूतीत्यादिना क्तिन उदात्तत्वं निपात्यते॥ अपि चास्माकं सातय उक्तानां गवादीनां लाभाय संभजनाय वा पथस्तदुपायरूपान्मार्गान् वि सितं। विशेषेण बध्नीतं। यथान्ये न प्रविशंति तथा कुरुतमित्यर्थः॥ षिञ् बंधने। छांदसो विकरणस्य लुक्। यद्वोपसर्गवशादयं धातुः स्वार्थविपरीते बंधनाभावे वर्तते। प्रस्तरणं प्रस्थानमिति यथा॥ पथो मार्गान् विसितं। विमुंचतं। प्रदर्शयतमित्यर्थः॥ पथिन्शब्दोऽन्तोदात्तः। तस्य भसि टिलोप उदात्तनिवृत्तिस्वरेण शस उदात्तत्वं॥

॥ अथ दशमी ॥

आ नो गोमंतमश्विना सुवीरं सुरथं रयिं।

वोळ्हमश्वावतीरिषः॥ १०

आ। नः। गोऽमंतं। अश्विना। सुऽवीरं। सुऽरथं। रयिं।

वोळ्हं। अश्वऽवतीः। इषः॥ १०

हे अश्विनाश्विनौ नोऽस्मभ्यं रयिं धनमावोळ्हं। आवहतं। आवहतं वहेर्लोटि छांदसः शपो लुक्। ढत्वधत्वष्टुत्वढलोपेषु कृतेषु सहिवहोरोदवर्णस्येत्योत्वं॥ कीदृशं रयिं। गोमंतं बह्वीभिर्गोभिर्युक्तं सुवीरं। वीर्यात्जाय इति वीराः पुत्राः। शोभनैस्तैरुपेतं। विविधमीरयंति शत्रूनिति वा वीराः शूराः। तैरुपेतं। सुरथं शोभनरथेन युक्तं। अपि चाश्वावतीरश्वयुक्ताः॥ मंत्रे सोमाश्वेति मतौ दीर्घः॥ इषः इष्यमाणान्यन्नानि चास्मभ्यमावहतं॥

॥ इति पंचमस्याष्टमे द्वितीयो वर्गः॥

द्विदेवत्यस्याश्विनग्रहस्य वाहधानेत्येषा याज्या। सूत्र्यते हि। होता यक्षदश्विना नासत्या वाहधाना शुभस्पती। आ० ५. ५। इति॥

॥ अथैकादशी ॥

वावृधाना शुभस्पती दस्रा हिरण्यवर्तनी ।

पिबतं सोम्यं मधु ॥ ११

वावृधाना । शुभः । पती इति । दस्रा ।

हिरण्यवर्तनी इति हिरण्यऽवर्तनी ।

पिबतं । सोम्यं । मधु ॥ ११

हे शुभस्पती शुभः शोभनस्यालंकारस्योदकस्य वा पती स्वामिनौ हे अश्विनौ ॥ सुबामंत्रित इति षष्ठ्यंतस्य परं गवद्भावात् षष्ठ्यामंत्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वं ॥ दस्रा दर्शनीयौ शत्रूणामुपक्षपयितारौ वा हिरण्यवर्तनी हिरण्मयमार्गौ । यद्वा वर्ततेऽस्मिन्निति वर्तनी रथः । हिरण्मयो रथो ययोस्तौ । यद्वा वर्तनि वर्तनमाचरणं । हितरमणीयाचरणौ । वावृधाना प्रवृद्धौ ॥ वृधेर्लिटः कानच् ॥ ईदृशौ युवां सोम्यं सोममयं मधु माधुर्योपेतं मदकरं वा रसं पिबतं ॥

॥ अथ द्वादशी ॥

अस्मभ्यं वाजिनीवसू मघवद्भ्यश्च सप्रथः ।

छर्दिर्यंतमदाभ्यं ॥ १२

अस्मभ्यं । वाजिनीवसू इति वाजिनीऽवसू । मघवत्ऽभ्यः ।

च । सऽप्रथः ।

छर्दिः । यंतं । अदाभ्यं ॥ १२

हे वाजिनीवसू । वाजिनी हविर्युक्ता यागक्रिया । तस्यां वसु धनं हविर्भागलक्षणं ययोस्तथाविधौ हे अश्विनावस्मभ्यं स्तोतृभ्यो मघवद्भ्यः । मघं धनं हविर्लक्षणं । तद्वद्भ्यो यजमानेभ्यश्च सप्रथः सर्वतः पृथु विस्तीर्णमदाभ्यं केनाप्यहिंस्यं छर्दिः । गृहनामैतत् । गृहं यंतं । नियच्छतं दत्तमिति यावत् यमेश्छांदसः शपो लुक् । छंदस्युभयथेत्यार्धधातुकत्वेन ङित्त्वाभावादनुनासिकलोपाभावः ॥

॥ अथ त्रयोदशी ॥

नि षु ब्रह्म जनानां याविष्टं तूयमा गतं ।

मो ष्व१न्यां उपारतं ॥ १३

नि । सु । ब्रह्म । जनानां । या । अविष्टं । तूयं । आ । गतं ।

मो इति । सु । अन्यान् । उप । अरतं ॥ १३

हे अश्विनौ वा यो युवां जनानां प्राणिनां मध्ये ब्रह्म ब्राह्मणजातिं [illegible] नितरामविष्टं अरक्षिष्टं । यद्वा जनानां यजमानानां ब्रह्म परि [illegible] मन्त्रं वा यो युवां न्यविष्टं न्यगच्छतं ॥ अवतिर्गत्यर्थः ॥ तो युवां तूयं क्षिप्रं आगतं । अस्मानभ्यागच्छतं । अन्यान् अस्मद्व्यतिरिक्तान्यजमानान् मो नैव सूपारतं । उपगमतं । कदाचिदपि नैव प्राप्नुतामित्यर्थः ॥ अरतेर्मांङि लुङि सर्तिशास्त्यर्तिभ्यश्चेति च्लेरङादेशः ॥

आपराह्णिके प्रवर्ग्ये समंस्थ हविषोऽस्य पिबतमिति द्वितीया याज्या । सूत्रितं च । अस्य पिबतमश्विनेति वा प्रोक्तो याज्ये । आ० ४. ७. । इति ॥

॥ सैषा सूक्ते चतुर्दशी ॥

अ॒स्य पिंबतमश्विना यु॒वं मद॑स्य चार्व॑णः ।

मध्वो रातस्य धिष्ण्या ॥ १४

अस्य । पिबतं । अश्विना । युवं । मदस्य । चार्वणः ।

मध्वः । रातस्य । धिष्ण्या ॥ १४

हे अश्विनावश्विनौ हे धिष्ण्या । धिषणा स्तुतिः । तदर्हौ युवं युवां मदस्य मदकरस्य चारुणः शोभनस्य रातस्य अभिदत्तस्यास्य मध्वो मधुरस्य सोमस्य [illegible] लक्षणं भागं पिबतं ॥ यद्वा द्वितीयार्थे षष्ठी ॥ इमं सोमं पिबतं ॥

॥ अथ पंचदशी ॥

अस्मे आ वहतं रयिं शतवंतं सहस्रिणं ।

पुरुक्षुं विश्वधायसं ॥ १५

अस्मे इति । आ । वहतं । रयिं । शतऽवंतं । सहस्रिणं ।

पुरुऽक्षुं । विश्वऽधायसं ॥ १५

हे अश्विनावस्मे अस्मभ्यं रयिं धनमावहतं। आनयतं। कथंभूतं। शतवंतं शतसंख्योपेतं सहस्रिणं सहस्रसंख्योपेतं च पुरुक्षुं बहुनिवासं यद्वा पुरुभिर्बहुभिः स्तुत्यं विश्वधायसं विश्वेषां सर्वेषामस्मदीयानां धारकं॥ वहिहाधाञ्भ्यश्छंदसीति दधातेरसुन्। णिदित्यनुवृत्तेर्णित्वाद्युगागमः॥

॥ इति पंचमस्याष्टमे तृतीयो वर्गः ॥

॥ अथ षोडशी ॥

पुरुत्रा चिद्धि वां नरा विह्वयंते मनीषिणः ।

वाघद्भिरश्विना गतं ॥ १६

पुरुऽत्रा । चित् । हि । वां । नरा । विऽह्वयंते । मनीषिणः ।

वाघत्ऽभिः । अश्विना । आ । गतं ।

हे नरा नरौ स्तोतॄणां धनस्य नेतारावश्विनौ मनीषिणो मनस ईशितारः स्तोतारो वां युवां पुरुत्रा चिद्धि बहुषु हि देशेषु विह्वयंते। विविधमाह्वयंति। तथा सति हे अश्विनौ वाघद्भिर्वोढृभिरश्वैरागतं। अस्मानेवागच्छतं॥

॥ अथ सप्तदशी ॥

जनासो वृक्तबर्हिषो हविष्मंतो अरंकृतः ।

युवां हवंते अश्विना ॥ १७

कदा । वां । तौग्र्यः । विधत् । समुद्रे । जहितः । नरा ।

यत् । वां । रथः । विऽभिः । पतात् ॥ २२

हे नरा नरौ नेतारावश्विनौ तौग्र्यस्तुग्रपुत्रो भुज्युः समुद्रे जले जहितो जहितैः प्रक्षिप्तः सन् कदा कस्मिन्काले वां युवां विधत् । अविधत् । स्तुतिभिः पर्यचरत् । यद्यदा वां युवयोर्विभिर्विभिरश्वैर्युक्तो रथः पतात् भुज्युं मज्जमानं पतेत् गच्छेत् तदानीं भुज्युरस्तौदिति पूर्वेणार्धेन सम्बन्धः प्रतिपत्तव्यं ॥

॥ अथ त्रयोविंशी ॥

युवं कण्वाय नासत्यापिरिप्ताय हर्म्ये ।

शश्वदूतीर्दशस्यथः ॥ २३

युवं । कण्वाय । नासत्या । अपिऽरिप्ताय । हर्म्ये ।

शश्वत् । ऊतीः । दशस्यथः ॥ २३

हे नासत्यौ सत्यौ साधू सत्यौ । न सत्यावसत्यौ । न असत्यौ नासत्यौ ॥ नभ्राण्नपादिति नञः प्रकृतिभावः ॥ यद्वा सत्यस्य नेतारौ नासिकाप्रभवौ वा । उक्तं च भगवता यास्केन । सत्यावेव नासत्यावित्यौर्णवाभः । सत्यस्य प्रणेताराविवत्याग्रायणः । नासिकाप्रभवौ बभूवतुरिति वा । तौ युवां कण्वायैतत्संज्ञाय ऋषये हर्म्ये हर्म्यस्थले परिरिप्ताय असुरैः पीडिताय शश्वद्बहुलीरूतीः रक्षाः दशस्यथः । दत्तवन्तौ । युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं । ऋग्वे० १. ११८. ७. । इत्यत्रेतिहास उक्तः । सोऽत्र द्रष्टव्यः ॥

॥ अथ चतुर्विंशी ॥

ताभिरा यातमूतिभिर्नव्यसीभिः सुशस्तिभिः ।

यद्वां वृषण्वसू हुवे ॥ २४

ताभिः । आ । यातं । ऊतिऽभिः । नव्यसीभिः । सुशस्तिऽभिः ।

यत् । वां । वृषण्वसू इति वृषणऽवसू । हुवे ॥ २४

हे दृषण्वसू वर्षणधनौ ॥ दृषण्वद्ग्रासमयोक्तपसंख्यानमिति दृषण्शब्दो निपात्यते ॥ तदानीं ताभिः पूर्वोक्ताभिर्नव्यसीभिर्नवतराभिः सुमतिभिः सुप्रशस्ताभिस्तुतिभी रक्षाभिः सार्धं यातं । आ गच्छतं यद्यदा वां युवां हुवे स्तुतिभिराह्वयामि ॥

॥ अथ पंचविंशी ॥

यथा चित्कण्वमावतं प्रियमेधमुपस्तुतं ।

अत्रिं शिंजारमश्विना ॥ २५

यथा । चित् । कण्वं । आवतं । प्रियऽमेधं । उपऽस्तुतं ।

अत्रिं । शिंजारं । अश्विना ॥ २५

हे अश्विनावश्विनौ यथा चिद्येन खलु प्रकारेण कण्वमेतन्नामकमृषिमावतं अरक्षतं । प्रियमेधं प्रियमेधनामकं चोपस्तुतमेतदाख्यं च शिंजारं शब्दयंतं स्तुवंतमत्रिमेता-न्यपीच येन प्रकारेणारक्षतं तथास्मानपि रक्षतमिति शेषः । यद्वैतावद्वां दृषण्वसू इत्यनयैकवाक्यता ॥

॥ इति पंचमस्याष्टमे पंचमो वर्गः ॥

॥ अथ षड्विंशी ॥

यथोत कृत्व्ये धनेंऽशुं गोष्वगस्त्यं ।

यथा वाजेषु सोभरिं ॥ २६

यथा । उत । कृत्व्ये । धने । अंशुं । गोषु । अगस्त्यं ।

यथा । वाजेषु । सोभरिं ॥ २६

उतापि च यथा येन प्रकारेण धने कृत्व्ये कर्तव्ये प्राप्तव्ये सत्यंशुमेतन्नामकमृषिं ओमार-क्षावतं अरक्षतं । गोषु च लब्धव्यासु यथागस्त्यमृषिमरक्षतं । वाजेष्वन्नेषु लब्धव्येषु यथा येन प्रकारेण सोभरिमेतन्नामकमृषिं चारक्षतं अत्रापि पूर्ववद्वाक्यशेष उत्तरयैकवाक्यता वा ॥

॥ अथ सप्तविंशी ॥

एतावंद्वां वृषण्वसू अतो वा भूयो अश्विना ।

गृणंतः सुम्नमीमहे ॥ २७

एतावंत् । वां । वृषणवसू इति वृषणऽवसू । अतः । वा ।

भूयः । अश्विना ।

गृणंतः । सुम्नं । ईमहे ॥ २७

हे वृषण्वसू वर्षणधनावश्विनावश्विनौ गृणंतः स्तुवंतो वयमेतावत् यथा चिद्धि कण्वमित्यादिना यावदनुक्रांतमेतत्परिमाणं सुम्नं सुखमतो वास्माद्वा भूयो बहुतरमधिकं सुम्नं वा युवामीमहे । याचामहे ॥

॥ अथाष्टाविंशी ॥

रथं हिरंण्यवंधुरं हिरंण्याभीशुमश्विना ।

आ हि स्थाथो दिविस्पृशं ॥ २८

रथं । हिरंण्यऽवंधुरं । हिरंण्यऽअभीशुं । अश्विना ।

आ । हि । स्थाथः । दिविऽस्पृशं ॥ २८

हे अश्विनावश्विनौ हिरण्यवंधुरं । सारथिस्थानं वंधुरं हिरण्मयसारथिस्थानं हिरण्याभीशुं हिरण्मयप्रग्रहं दिविस्पृशमन्तुःगतत्वाद्दिवं स्पृशंतं ॥ स्पृशेः क्विन् । हविष्यस्तात् द्वितीयार्थे सप्तमी हलदन्तात्सप्तम्याः संज्ञायामित्यलुक् ॥ ईदृशं रथमा हि स्थाथः । युवामातिष्ठथ एव । हिरण्यधारणे । अस्मदीयां स्तुतिं श्रोतुं शीघ्रं रथेनागंतव्यमिति भावः ॥ ष्ठा गतिनिवृत्तौ । लटि छांदसः शपो लुक् ॥

॥ अथैकोनत्रिंशी ॥

हिरण्ययीं वां रभिरीषा अक्षो हिरण्ययः ।

उभा चक्रा हिरण्ययां ॥ २९

हिरण्ययी । वां । रभिः । ईषा । अक्षः । हिरण्यः ।

उभा । चक्रा । हिरण्ययां ॥ २९

हे अश्विनौ वां युवयोः रभिरारंभणोपलंभनभूता रथस्येषा हिरण्ययी हिरण्मयी हिरण्यविकारा । अथवा हिरण्ययी हिरण्मयी हिरण्यनिर्मिता ईषा अक्षादिषु छंदसीति प्रकृतिभावः । अपि चोभावपि हे अपि चक्रा चक्रे रथचरणे हिरण्यया हिरण्मये सुवर्णनिर्मिते ॥ सुपां सुलुगिति द्विवचनस्याकारः । ऋत्व्यवास्त्व्येत्यादिना हिरण्ययशब्दो मयटो मलोपो निपात्यते ॥

॥ अथ ॥

तेनं नो वाजिनीवसू परावतंश्चिदा गतं ।

उपेमां सुष्टुतिं ममं ॥ ३०

तेनं । नः । वाजिनीवसू इति वाजिनीवसू । पराऽवतः ।

चित् । आ । गतं ।

उपं । इमां । सुऽस्तुतिं । ममं ॥ ३०

हे वाजिनीवसू अन्नवन्तावश्विनौ य उक्तो हिरण्मयसर्वावयवो रथः तेन रथेन नोऽस्मान्परावतश्चित् दूरदेशादप्यागतं । आगच्छतं ॥ गमेर्लोटि छांदसः शपो लुक् । अनुदात्तोपदेशेत्यनुनासिकलोपः ॥ इदानीमुपरितनेकवचनाह । मम मदीयामिमामिदानीं क्रियमाणां सुष्टुतिं शोभनां स्तुतिं चोपगच्छतं ॥

॥ इति पंचमस्याष्टमे षष्ठो वर्गः ॥

॥ अथैकत्रिंशी ॥

आ वहेथे पराकात्पूर्वीरश्नंतावश्विना ।

इषो दासीरमर्त्या ॥ ३१

आ वहेथे इति । पराकात् । पूर्वीः । अश्नंतौ । अश्विना ।

इषंः । दासीः । अमर्त्या ॥ ३१

हे अगत्यौ भरणावश्विनावश्विनौ दासौः। दासा उपक्षपयितारोऽसुरा। तत्संबंधिनीः पूर्वीः पुरीरश्नंतौ भक्षयंतौ भंजंतौ युवामिषोऽन्नानि परा कात्परागताद्दूरदेशादध्वदेशे। अस्मान्प्रापयथः। यद्वाश्नंतौ व्याप्नुवंतौ॥ अशू व्याप्तौ। अश्नातेर्व्यत्ययेन श्ना परस्मैपदं च॥ पूर्वीर्दासीर्दासस्योपक्षपयितुः शत्रोः संबंधिनीरिषोऽन्नानि शत्रुभ्योऽपहृत्यास्मान्प्रापयथः॥

॥ अथ द्वात्रिंशी॥

आ नो द्युम्नैरा श्रवोभिरा राया यातमश्विना।

पुरुश्चंद्रा नासत्या॥ ३२

आ। नः। द्युम्नैः। आ। श्रवःऽभिः। आ। राया॥ यातं। अश्विना।

पुरुऽचंद्रा। नासत्या॥ ३२

हे पुरुश्चंद्रा बहुहिरण्यौ। यद्वा पुरूणां बहूनामाह्लादकौ ह्रस्वाच्चंद्रोत्तरपदे मंत्र इति सुट्। पादादित्वात् षाष्ठिकमामंत्रिताद्युदात्तत्वं॥ हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वा॥ आमंत्रितं पूर्वमविद्यमानवदिति पूर्वस्यामंत्रितस्याविद्यमानवद्भावादिदमप्यामंत्रितमाद्युदात्तं। न च नामंत्रिते समानाधिकरण इत्यविद्यमानवद्भावनिषेधः पुरुश्चंद्रत्वस्य विशेषणवचनत्वात्॥ ईदृशौ हे अश्विनाश्विनौ द्युम्नैर्द्योतमानैर्दातव्यैः सार्धं नोऽस्मानायातं। आगच्छतं। तथा श्रवोभिः श्रवणीयैर्धनैरस्मानागच्छतं। तथा राया धनेन चास्मानागच्छतं॥

॥ अथ त्रयस्त्रिंशी॥

एह वां प्रुषितप्सवो वयो वहंतु पर्णिनः।

अच्छा स्वध्वरं जनं॥ ३३

आ। इह। वां। प्रुषितऽप्सवः। वयः। वहंतु। पर्णिनः।

अच्छ। सुऽअध्वरं। जनं॥ ३३

पृथ्विगाविद्याविन्यासे वा युवां पुषितमुष: ॥ पुषि: ... ॥ क्लिग्धरूपाः
, पक्षोपेताः । यद्वा सुप्सोपमसेतत् । पक्षिण इव शीघ्रगामिनो वा गंतारोऽश्वः
अनवद्यं यजमानलक्षण अनवद्याभिसुखमावर्ततु । आनयंतु ॥

॥ अथ चतुर्विंशी ॥

यामनुगायसं य इषा वर्तते सह ।

चक्रमभि बाधते ॥ २४

या । वां । अनुऽगायसं । यः । इषा । वर्तते । सह ।

। चक्रं । अभि । बाधते ॥ २४

। नौ यो रथोऽन्नं देवेनान्नेन सह वर्तते वां युवयोः सम्भूतमनुगायसं
... तं रथं चक्रं परसैन्यं नाभिबाधते । नाभिहंति । यद्वा चक्रं
धनं ॥ चक्रार्थे कविधानमिति कः । लआदीनां क इति द्विर्वचनं ।
। चक्रुरिति कर्तृपदमध्याहर्तव्यं ॥

॥ अथ पंचविंशी ॥

यायेन रथेन द्रवत्पाणिभिरश्वैः ।

विना नासत्या ॥ २५

यायेन । रथेन । द्रवत्पाणिऽभिः । अश्वैः ।

। विना । नासत्या ॥ २५

... मनोवेगवंतौ ॥ आमंत्रिताद्युदात्तत्वं ॥ हे नासत्या सत्यस्वभावौ
नौ वा ॥ आमंत्रितं पूर्वमविद्यमानवदिति पूर्वस्याविद्यमानत्वेन पदाद-
कनिघाताभावः । न च नामंत्रितविद्यमानवत्वनिषेधो भोजवनेत्यस्य
सामान्यवचनत्वाभावात् । आमंत्रिते हि विशेषणं ॥ ईदृशौ युवां
प्रगमनपदैरश्वैर्युक्तेन हिरण्मयेन हिरण्मयेन स्वर्णमयेन रथेना-
यद्वा भोजना नासत्येत्येतद्द्वयमपि प्रथमांतमेव नामंत्रितं । धियो
.ग्रे ...। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ ईदृशेन रथेन शीघ्रगमनौ
भाग च्छतमिति शेषः ॥

॥ इति पंचमस्याष्टमे सप्तमो वर्गः ॥

॥ अथ षट्त्रिंशी ॥

युवं वरं जागृवांसं स्वदथो वा वृषण्वसू।

ता नः पृंक्तमिषा रयिं ॥ ३६

युवं। वरं। जागृऽवांसं स्वदथः। वा।

वृषण्वसू इति वृषणऽवसू।

ता। नः। पृंक्त। इषा। रयिं ॥ ३६

वा।यद्यर्थः समुच्चये। अपि च हे वृषण्वसू वर्षणधनावश्विनौ युवं युवां जागृवांसं जागरणशीलं सकार्ये मदजननेऽप्यग्रं वरं वरणीयमभ्येषणीयं सोमं स्वदथ। आस्वादयथः। यद्वा जागृवांसं जाग्रतं वरं स्तुवतामभूरं स्वदथः। स्वदयथ। संस्कुरुथ इत्यर्थः। ता तौ युवां नोऽस्मदर्थमिषाऽन्नेन रयिं धनं पृंक्तं। संपृंक्तं। इदं दत्तं धनमस्मभ्यं प्रयच्छतमित्यर्थः ॥

॥ अथ सप्तत्रिंशी ॥

ता मे अश्विना सनीनां विद्यातं नवानां।

यथा चिच्चैद्यः कशुः शतमुष्ट्रानां ददत्सहस्रा दश गोनां ॥ ३७

ता। मे। अश्विना। सनीनां। विद्यातं। नवानां।

यथा। चित्। चैद्यः। कशुः। शतं। उष्ट्रानां। ददत्।

सहस्रा। दश। गोनां ॥ ३७

हे अश्विनावश्विनौ ता तादृशौ युवां नवानामभिनवानां मे मदीयानां सनीनां संभजनीयानां धनानां ॥ कर्मणि षष्ठी ॥ ईदृशानि धनानि मे मह्यं दापयितुं विद्यातं जानीतं। यथा चित् येन खलु प्रकारेण चैद्यश्चेदिपुत्रः कशुरेतन्नामा ... शतं तथा गोनां गवां दश सहस्रा दशसंख्यानि सहस्राणि ददत् दद्यात् तथा विद्यातमिति पूर्वत्रान्वयः ॥

॥ अथाष्टात्रिंशी ॥

यो मे हिरण्यसंदृशो दश राज्ञो अमंहत।

अधस्पदा इच्चैद्यस्य कृष्टयश्चर्मम्ना अभितो जनाः ॥ ३८

यः। मे। हिरण्यऽसंदृशः। दश। राज्ञः। अमंहत।

अधःऽपदाः। इत्। चैद्यस्य। कृष्टयः। चर्मऽम्नाः। अभितः।

जनाः॥ ३८

यः कशुर्नाम राजा मे मह्यं हिरण्यसंदृशो हिरण्यसंदर्शनान् हिरण्यसमानतेजस्कान् दश राज्ञोऽमंहत परिचरणार्थं दत्तवान्। दशसंख्याकान् राज्ञो युद्धे पराजितान् गृहीत्वा दासत्वेनास्मै दत्तवानित्यर्थः। नन्वीदृशाना बहुविधाना राज्ञां दान एकः कथं शक्नुयादिति तत्राह। कृष्टयः सर्वाः प्रजा अस्य चैद्यस्य चेदिपुत्रस्य कशोरधस्पदा इत् पादयोरधस्तादेव वर्तन्ते। न कश्चिदपि तत्समानस्तदधिको वा विद्यते। अभितः सर्वतो वर्तमाना जनाश्चर्मम्नाश्चर्ममयस्य कवचादेर्धारणे कृताभ्यासाः। यद्वा चर्माणि चरणसाधनान्युपानहादीनि वाहनानि। तेषु नितरामभ्यस्यन्तीति चर्मम्नाः॥ म्ना अभ्यासे। आतो मनिन्निति विच्॥ सर्वे मनुष्यास्तस्य भटा इत्यर्थः॥

॥ अथैकोनचत्वारिंशी ॥

माकिरेना पथा गाद्येनेमे यन्ति चेदयः।

अन्यो नेत्सूरिरोहते भूरिदावत्तरो जनः॥ ३९

माकिः। एना। पथा। गात्। येन। इमे। यन्ति। चेदयः।

अन्यः। न। इत्। सूरिः। आ। ओहते। भूरिदावत्ऽतरः।

जनः॥ ३९

येन मार्गेण इमे चेदयोऽस्य राज्ञः पितृपितामहादयो यन्ति गच्छन्ति एनानेन पथा मार्गेण माकिर्गात्। अन्यो न गन्तुं शक्नोति। अपि चास्माद्राज्ञोऽन्यो भूरिदावत्तरो बहुदातृतमः सूरिर्विद्वान् ननु जनो नेत् नैवोहते। वहति। स्तोतृभ्यो धनं

